# विषयसूची

## गोरक्षा

गवे हितं भुवे हितं
  गवे सुखं भुवे सुखम् ।
सवे भवे नवे नवे
शिवपि गौः हिता ध्रुवम् ॥
शिशुप्रवर्धती मह्वा-
  कृशप्रजीवनी मता ।
अरोगजीवनप्रदा
  दुरूहसाधुता युता ॥
मलेन मूत्रवारिणा
  पयोघृतादिसंपदा ।
सदा च वैदिकान् जनान्
  पुनाति प्रीणयत्यसौ ॥
सरित्समुद्रपर्वत-
  प्रभूतदेवताचयम् ।
दधाति चात्मविग्रहे
  श्रियं च पश्चिमांगके ॥
इयं हि भारतादृता
  पिया जनन्यतो मता ।
भृशं भृताऽनिशं क्षतात्
  निवारिताऽचिरं भवेत् ॥

## गोवधनिषेधावश्यकता

गौरस्माकं माता, गौरस्माकं संपत, गौरस्माकं दैवतम् , गौरस्माकं प्राणः। तादृश्याः गोः वधः भारते एव बहुलतया प्रचलतीति महत खेदस्थानम्। अथापि स्वतन्त्रराज्यकाले गोः एषा दुर्दशेति महत् लज्जावहम्। यस्याः खुरधूल्यामपि लक्ष्मीर्वसति, शकृत्पिण्डेऽपि पवित्रता भासते, मूत्रेऽपि अतिमात्रप्रभावो वर्तते, क्षीरे अमृतमेव निगूहितं। साधुनामूर्तेः तस्याः वधः मांसाशया बहुलतरं भवतीति दूयते भारतीयानां हृदयम्। यदि शिववीरः अद्य यावत् अजीविष्यत तर्हि स स्वरुधिर-मेव आर्पयिष्यत गोमातृरक्षणाय।

अथापि एतस्मिन्नपि काले बहवस्साधवः गोरक्षणार्थं बद्धदीक्षा अनशनेन आत्मसमर्पणेन गोवधं रोद्धुं उद्युजते। तथापि सर्वकारः गजनिमीलिकया तत्प्रार्थ-नामवधीरयति। भारतीयसंविधाने चतुर्थभागीय - अष्टचत्वारिंशद्धारानुसारं गवां वत्सानां च वधं निरोद्धुं अधिकृत एव सर्वकारः। अथापि सः आत्मकर्तव्यं प्रान्तसर्वकारेषु अपवाह्य मौनमातिष्टते। न जानीमहे सर्वकारस्य भावम्। गोवध-निषेधेन महम्मदीयसोदरा विरज्येयुरिति भावयति अथवा विदेशद्रव्यसंपादन-विहतिर्भवेदिति वा। आद्या शंका च न समुचिता।

यतः महम्मदीयप्रमुखानामेव भावाः गोवधविरोधिनो भवन्ति। यथा —

1. आयशा हजरत (महम्मद महाशयस्य धर्मपत्नी) वदति —

   * (फरमाया रसूल अल्लाह ने कि गाय का दूध शिफा है और घी दवा और उस का मांस नितान्त मर्ज (रोग) है।)
   भगवानकथयत् गोः दुग्धमाहारः घृतं औषधं, परन्तु तस्याः मांसस्तु रोगः इति।

2. मुल्ला मोहम्मद् बाकर हुसैनी वदति –

* (गाय को मारनेवाला फलदार वृक्ष काटनेवाला और शराब पीने वाला कभी नहीं बक्शा जायेगा)

गोघातकः फलवृक्षच्छेदकः मद्यपश्च न कदापि सुखी भवेत इति ।

3. अल्लामा जलालुद्दीन् सियुती (अलरहमत) वदति –

* (गायके गश्त में बीमारी है। उस के दूध में दुआ और घी शफा है।)

गोः मांसे रोगः वर्तते तस्याः दुग्धे

4. हकीम अजमल खां वदति –

* (न तो कुरान और न अरब की प्रथा ही गौ की कुर्बानी का समर्थन करती है।)

कुरानो वा आरभाचारो वा न गोवधं समर्थयतः इति ।

5. रफी अहम्मद किद्वाई महाशयो वदति –

* (गोवध निषेध का प्रश्न अब दीर्घकाल तक स्थगित नहीं रक्खा जासकता। जनतन्त्र के सिद्धान्तानुसार जनता की मांग को स्वीकार करना ही चाहिये)

गोवधनिषेधप्रश्नः इदानीं बहुकालं यावत् स्थगितत्वेन स्थापयितुं न शक्यते प्रजातन्त्रसिद्धांतानुसारात् प्रजाभीष्टमङ्गीकर्तव्यमेव इति।

तिलक गांधीमालव्या प्रभृतयश्च गोवधनिषेधं प्रति स्वाभिप्रायं मुक्तकण्ठमाविरकुर्वन् । एवं स्थिते सर्कारस्य प्रथमभीतेरवकाश एव नास्ति ।

अथ द्वितीया भीतिः, सा अपि अयुक्ता । विदेशद्रव्य संपादने अनेकः रीतयः वर्तन्ते । तत्र गमांसविक्रयेण धनसंपादनं तु नीचतमा रीतिः । गोमातुः मांसविक्रयेण धनमार्जयित्वा जीविकायापनं लज्जाकरं भवति । यदि एषा पद्धतिः शुभा तर्हि स्वभगिनीनां भारतदेशं वा यस्मैकस्मैचिदर्पयित्वा तद्द्वेतन उदरपोषणं किं न वरं स्यात ।

अतः श्रृणोतु सर्वकारः भारतीयकण्ठध्वनिं, गोवधं निषेधतु, रक्षतु गोरक्षणाय आत्मप्राणमुपेक्षमाणान् साधून् । न हि विलम्बस्यावकाशः । संदीप्ते भवने तु कूपखननं पर्युद्यमो मा भूत ।

लोकास्समस्ताः सुखिनो भवन्तु !

# राजाजीकथा ३०

## घृतस्वामिनः

लेखकः – आ० वरदराजन्

नारायणश्रेष्ठी इतस्ततः नेदिष्ठान् ग्रामान् गत्वा तत्र तत्र समीचीनं घृतं अल्पमूल्येन क्रीत्वा, सर्वं समुच्चित्य नगरं प्रेषयन्, बहुमूल्येन विक्रीय धनं सम्पादयन्नास्त । एवं स शनैः शनैः धनं संचितवान् ।

यथा यथा धनं संचितं (मत) आसीत्, तथा तथा तस्य श्रेष्ठिनः धनाशा प्रवर्धमानाऽसीत । स घृतेन सह भूचणक तैलमपि संयोज्य विक्रेतुं आरेभे, महान् लाभः प्राप्तः तस्य ।

★ ★ ★

तस्य सकाशे घृत - क्रेतारः "किमिदानीं त्वत्सकाशे पूर्ववत नास्ति घृतं" इति प्रष्टुमारेभिरे ।

अहं किं कुर्याम् भोः ! दोग्ध्रीणां गवां नेदानीं समीचीनो घास-ग्रासो लभ्यते । गोक्षीरमेव दुर्लभमिदानीं इति नारायणश्रेष्ठी नयेन साम्ना तान् समाहितमनसः कृत्वा प्रेषयति स्म ।

सर्वेऽपि व्यापारिणः नारायणश्रेष्ठिना सह स्पर्धमानाः घृते तैलं विलाप्य विक्रेतुं प्रवृत्ताः ।

★ ★ ★

एवं ग्रामो न्याय्यान्मार्गादपेतः कथं ? इति दक्षिणदेशादागताः स्वामिनः केचित समेषां वदान्तोपन्यासं श्रावयन्त आसन् ।

नारायणश्रेष्ठी प्राह – "देवो नाऽस्ति" इति देवश्चेत्स्यात, तर्हि घृते तैलं विलाप्य विक्रेतारं तं श्रेष्ठिनं दण्डयेदवश्यम् । अतः नारायणश्रेष्ठिनोऽयमासीत्सुदृढऽभिप्रायः । स स्वयं विश्वसिति "देवो नाऽस्तीति" एवं अन्येभ्योऽप्युपदिशति तत् तथा ।

वत्स ! पश्योपरि परितश्च; समस्तं विश्वं पश्यन् कथं देवो नास्तीति वक्तुं शक्नोषि ? इत्युक्त्वा तत्त्वशास्त्रग्रन्थान् तस्मै प्रदाय अधीहि भो! इति प्राहुः स्वामिनः ।

सोऽपि तथेति तान् ग्रन्थानधीतवान् । पुस्तकपठनेन ज्ञानं लभ्यते वा ? अन्तर्धनाशा यावत जागर्ति; एवं सति कियता वा श्रमेण स पठतु नाम; व्यर्थं, वृथैव । देवो नास्तीत्येव तस्य सुदृढो विश्वासः, सोऽप्रकम्प्यः । कदाचित नारायणश्रेष्ठिनो गृहे चोराः प्रविश्य तेन संचितं धनं सर्वं निश्शेषं अपहृत्य गताः । नारायणश्रेष्ठिनः न कस्मिन्नपि विश्वासः । न कुत्राऽपि धनागारे विश्वस्य धनं निक्षितम् । सर्वे वञ्चकाः, सर्वत्र प्रतारणं भवेदिति तस्य भीतिः । स सर्वान् आत्मवदमन्यत । ततः स्वसंपादितं सर्वं स्वे गृहे कस्मिंश्चित् सुरक्षितस्थाने निक्षिप्तवान् । चोराः तत्सर्वस्वं निश्शेषं अपहृत्य गताः ।

श्रेष्ठी हाहाकारेण रुरोद । पुनर्व्यापारं कर्तुं प्रवृत्तः । परन्तु, न कोऽपि विश्वस्य तस्मै मूलधनं प्रायच्छत । स स्वतो व्यापारं परित्यज्य कस्यचित व्यापारिणः सकाशे लेखकोऽभवत् । ततःपरं तस्य दैवविश्वासः, दैवभक्तिश्च प्रादुर्बभूव । स्वामिभिः प्रदत्तानि पुस्तकानि सर्वाण्यप्यधीतवान् । तेषां परमार्थं गृहीतवान् । अन्येभ्योऽपि तमुपदेष्टुं प्रवृत्तः । स्वकीयं धनमपहृतं सर्वात्मना व्यस्मार्षीत । प्रत्यहं देवालयं गत्वा भगवन्तं सेवमान आस्त ।

तस्य स्वामी व्यापारी अपि तस्य सकाशे तत्त्वविचारेण कालक्षेपमकरोत । सर्वेषामपि तस्मिन्नत्यन्ता प्रीतिः । सर्वेऽपि तं घृतस्वामिनमाहुः ।

* * *

केचिदपृच्छन् – भवतां गृहे चोराः प्रविश्य सर्वस्वमपहृतवन्तः खलु ! तदात्वे भगवान् तत्रभवन्तं कुतो न रक्षितवान् ? इति ।

तस्य समाधानं स प्रशान्तेनैव वचसा अनुद्विग्नोऽब्रवीत् ।

"मां संस्कर्तुं, सन्मार्गे प्रवर्तयितुं चैव चोराः गृहं प्रविष्टाः । भगवल्लीला अनूह्या अनिर्वचनीयाश्च । चोरैः न मदीयं धनमपहृतं, किन्तु मनो - मालिन्यं इत्याह सः ।

विपदो नैव विपदः संपदो नैव संपदः ।
विपद्विस्मरणं विष्णोः, संपन्नारायणस्मृतिः ॥

# अष्टोत्तरशतदिव्यदेशस्तुतिः

## श्री कांची प्र. भ. अण्णङ्गराचार्यस्वामिकृता

( सटिप्पणीका )

( पूर्वानुबन्धः )

### १४. धन्विनव्यनगरी (श्रीविल्लिपुत्तूरु) दिव्यदेशः

श्रीविष्णुचित्तमुनिसत्तनयावतारभूमौ तदीयफणितिप्रथितप्रभावे ।
श्रीधन्विनव्यनगरे वटपत्रशायिनाम्ना लसन्तमनिशं भगवन्तमीडे ॥

### १५. श्रीतोताद्रि (वानमामलै) दिव्यदेशः

श्रीमद्वानमहाचलस्थितिजुषं तैलाभिषेकप्रियं
दिव्यश्रीशठकोपसूरिफणितिप्रख्यातविख्यातिकम् ।
श्रीमद्रम्यवरोपयन्तृमुनिराट्श्रीपादरेखामय-
श्रीरामानुजयोगिजुष्टमनिशं सेवेय देवाधिपम् ॥

### १६. वैष्णववामन (तिरुक्कुरुङ्गुडि) दिव्यदेशः

भक्तिसारशठवैरिकलिद्विड्विष्णुचित्तमुनिवागुपगीतम् ।
भक्तगायकनिषेवितमीडे वैष्णवोपपदवामनदेवम् ॥

### १७. तिरुत्तण्काल् (शीतवातपुर) दिव्यदेशः

शीतवातपुरनाम्नि महिष्ठे नित्यवासरसिकं शुभदेशे ।
भूतयोगिकलिजिन्मुनिगीतं नित्यभोग्यभगवन्तमुपासे ॥

### १८ तिरुक्कूडल् (दक्षिणमधुरा) दिव्यदेशः

श्रीभट्टनाथमुनिसूक्तयवतारभूमौ कूडल्पमाख्यनगरे कलिजित्प्रगीते ।
विद्योतमानमसमानमहाप्रभावं श्रीसुन्दरं हरिमहं हृदि चिन्तयेयम् ॥

## अथ केरलमण्डलत्रयोदशदिव्यदेशस्तुतिः

### १. श्रीमदनन्तपुरदिव्यदेशः

अनन्तपद्मनाभ भो! शठारिसूरिसूक्तिभिर्विराजमानवैभव! स्वपादपद्मसेविनां
शुभानि साधु वर्धय स्वभक्तभक्तिमेधय प्रणाशयार्तिसञ्चयाननन्तपूरधीश्वर ॥

### २. तिरुवण्परिचारदिव्यदेशः

तिरुवण्परिचारसमाख्यपुरे शठकोपमुनीन्द्रनुते रुचिरे ।
विलसन् कमलारमण! प्रणते मयि दिव्यदृश दिशतादनिशम् ॥

### ३. तिरुवाट्टारुदिव्यदेशः

तिरुवाट्टारिति जगति प्रथिते नगरे पवित्रसरिदाढ्ये ।
शठरिपुविनुते फणिराट्छयनोज्वल नाथ! रक्ष मां प्रणतम् ।

### ४. तिरुवल्लवाऴ्दिव्यदेशः

अनन्तशयनस्थलीसदृशवैभवोदञ्चिते
प्रसिद्धतिरुवल्लवाऴिति शुभाख्यया भासुरे ।
परांकुशकलिद्विषोर्मुनिवरेण्ययोस्सूक्तिभिः
स्तुते जनपदे स्थित! प्रणतवत्सलेक्षस्व माम् ॥

# रम्याणि वीक्ष्य

ले. काल्रूरि हनुमन्तराव:

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥

एष श्लोकः अभिज्ञानशाकुन्तलनाटके पञ्चमांकारम्भे अस्ति । राजा दुष्यन्तः शकुन्तलां गांधर्वविधिना परिणीय स्वराजधानीं गतवान्, किन्तु दुर्वासश्शापात् तां विस्मृतवान्। विदूषकसहितो राजा "अभिनवमधुलोलुपः......" इति हंसपदिकाया गीतिमाकर्ण्य बलवदुत्कण्ठितो भवति । इष्टजनविरहरहितोऽपि दुष्यन्तो गीतिमाकर्ण्य पर्युत्सुको बभूव । तत्पर्युत्सुकता पूर्वजन्मसंबन्धात् आयातेति तर्कयामास । दुर्वासश्शापात् दुष्यन्तस्य शकुन्तलाविषयिकविशेषस्मृतिः प्रतिहता । परन्तु पतिपत्न्योः आत्मनिष्ठं यत्सन्निहितत्वं तन्न प्रतिहतम् । पूर्वजन्मभाव इव इदमित्थमिति निर्णेतुमशक्यः शकुन्तलाविरहो दुष्यन्तमव्यक्तः बाधते स्म । दुष्यन्तस्यैतन्मनस्स्थितिं प्रदर्श्य अनन्तरं कण्वशिष्यसहितां शकुन्तलां प्रवेशयता महाकविना-कालिदासेन उत्तमकल्पनया नाटकरचना कृता ।

विमर्शवचनपरिपाटिरेवमस्ति दुर्वासश्शापवृत्तान्तं कल्पयता कालिदासेन महाभारतात् दुष्यन्त उदात्तीकृत इति । महाभारते दुष्यन्तः शकुन्तलां परिणीय नूनं विस्मृतवान् अथवा क्रण्वभयात् स्मरन्नपि उपेक्षमाण आसीत्, गर्हणीयं तत्कर्म। अभिज्ञानशाकुन्तले तु शापोपहतो विस्मार उदार एव इति प्राहुः । न समीचीनः प्रतिभात्येनदभिप्रायः । नीचोपि कृतप्रणयां स्त्रियं न विस्मरति । कथं राजा दुष्यन्तः "धर्मात्मा महात्मा पुरुषोत्तमः" इति काव्ये प्रशस्तः विस्मरेत ? नैव विस्मृतवान् लोकशङ्कामान्नेनुमाकाशवाणीश्रवणावधि विस्मृतवानिव प्रावर्तत ।

पुराणकथापठने नव्याः प्रायशः प्रमाद्यन्ति। कथाया एकदेशं विश्वसन्ति, शेषं कल्पनमिति दूषयन्ति। तथा न मन्तव्यम्। दुष्यन्तकृतं शकुन्तला-प्रत्यादेशं विश्वसद्भिराकाशभाषणमपि विश्वसनीयम्। तथैव सीताग्निप्रवेशो वह्निना पुनस्तदानयनसमेतो विश्वसनीयः। यद्याकाशभाषणं न विश्वसन्ति प्रत्यादेशमपि न विश्वसन्तु। काव्यं कात्स्न्र्येन काव्यदृष्ट्या द्रष्टव्यं नैकदेशेन चरित्रदृष्ट्या। अभिप्राय-प्रधानानि नाम काव्यानि। अभिप्रायाविष्करणाय कवयो वृत्तान्तान् घटयन्ति। दुष्यन्तवृत्तान्ते राज्ञो धर्मनिष्ठा प्रधानविषयः, तथा सीतावृत्तान्ते पातिव्रत्यमहिमा।

तस्मात् महाभारतेऽपि दुष्यन्तः उदारपुरुषः। महाभारतकथायाः ये ये परिणामाः कालिदासेन कृताः ते नाटकाननुकूलां पुराणकथां नाटकयोग्यां कर्तुं संघटिताः, अनुदात्ताकथा उदात्तीकृतेति तु न।

# स्वस्वरूपदर्पणम

ले. नारायणमूर्तिः, आल्लगड्डा.

ऋषयो ब्रह्मनिर्वाणं लभन्ते विजितेन्द्रियाः
छिन्नद्वैधाः क्षीणपापाः सर्वभूतहिते रताः ।
गुहापात्र इदं तत्त्वं कज्जलेऽनुभवाह्वये
मग्नया वृत्तिलेखिन्या हृत्पद्मे लिख्यते सतः ॥

सत्यविषयोऽयं बुद्धिरूपगुहापात्रस्थानुभवरूपमषीनिमग्नवृत्तिरूपलेखनी-मादाय साधुशीलहृदयरूपपत्रोपरि विलिख्यते ।

जीवं — चिदाभासं जननमरणाद्यनर्थप्रभवानुभवरूपसंसारसमुद्रपारावार-प्रापिका स्वस्वरूपानुभूतिरेव । अनुभूतेरस्या महत्तरा महोन्नता च दशा नास्त्ये-वान्या । अस्तीति वदन्ति ये ते प्रथमतः इमामनुभूतिमनुभूय यदि भाषेरन् न्याय्यमेव, युक्तमेव, अंगीकार्यमेव । नो चेन्न । हठ एव स्यात्तादृशानां भाषणे ।

स्वस्वरूपं नित्यसिद्धमपि अनिवचनीयानाद्यविद्याच्छादितं सत् अननुभूतं भवति । तदनुभूतेः श्रुत्यन्तश्रवणमेव परं साधनम् । कर्मभक्ती परम्परासाधने भवतः ।

सर्वेषामपि चेलानां सत्यरूपं कार्पासो यथा तथैव चराचरस्यास्य मूलरूपं अनन्तसच्चित्सुखस्वरूपब्रह्मैव । तथा सति तदेव पाठकस्यास्यापि निजरूपम् । तदेवास्यां पुस्तिकायां स्वरूपेण निरूप्यते —

आब्रह्मस्तम्बपर्यन्तभूतयाथात्म्यमुच्यते ।
स्वस्वरूपं त्रिकालेष्वप्यबाध्यं सद्विराजते ॥

ब्रह्मदेवादारभ्य तृणपर्यन्तस्थसमस्तभूतानां यद्यथार्थस्वरूपं स्यात्त-देवाधिकृत्य वच्मि । कस्यचित् ब्रह्मविदः स्वरूपमेव न । सकलभूतानामपि स्वस्वरूपं (निजरूपं) त्रिकालाबाध्यमेवास्ति । अर्थात् तत् नामरूपात्मिकायाः सृष्टेरस्याः प्राग्यथा-

मीत् तथैवेदानीमपि प्रलयानन्तरमपि एकरसं (एकविधं) प्रकाशमानं वर्तते इत्यर्थः। तदेव स्वस्वरूपं महासत्. सत्पदार्थः, सत्यं इति च कथ्यते।

स्वस्वरूपं महाज्ञानं स्वस्वरूपं महासुखम्।
स्वस्वरूपं महाशान्तिः नित्यमुक्तं स्वभावतः॥

किञ्च सकलभूतानामपि निजरूपं आद्यन्तरहितं महाज्ञानं भवति। अपि च तत् आद्यन्तरहित - व्यापकं महासुखं विद्यते। तदन्तरहितमहाशांतिः अतीवानन्दरूपेण स्थित्वा सहजमोक्षस्वरूपमेव वर्तते।

स्वस्वरूपं स्वशक्त्यायुक् महाविष्णुर्महेश्वरः।
स्वस्वरूपं तथा ब्रह्मा रविरिन्दुः सुरेश्वरः॥

सकलानामपि भूतानां यन्निजरूपं तदेवानिर्वचनीयरूपस्वशक्त्या (माया प्रकृतिरविद्येति कथ्यमानस्वप्रभावेण) एकदेशे महाविष्णुर्महेश्वरश्च भवति। अर्थात् एभीरूपैः स्वमेव प्रकटो भवति। अपिचैवं रूपेण तदेव ब्रह्मा रविरिन्दुरिन्द्रश्च भवति।

स्वस्वरूपं सुराः सर्वेऽप्यसुराः सिद्धकिन्नराः।
स्वस्वरूपं तथा साध्याः पन्नगा गरुडा अपि॥

तन्निजरूपमेव समस्तसुरासुरसिद्धसाध्यकिन्नरगरुडपन्नगादिरूपैर्व्यक्ती-भवति।

# पराभत्र - दक्षिणायन - परीक्षा - फलितांशाः

## Samskita Bhasha pracharini Sadha, Chittoor.

### Resusts Of Septembet Examinations 1966.

The following are the register numbers of the successful candidates who appeared for the Sanskrit Examinations held on 10th 11th and 12th September 1966 by the Samskritha Bhasha Pracharini Sabha, Chittoor.

### परिचयः PARICHYA

प्र.श्रे I Class: 6 7 8 9 10 13

18 22 23 24 29 82 84 133 137

138 139 140 142 143 150 151 152 154

155 157 158 160 161 163 180 181 182

184 204 205 207 219 230 234 245 247

278 282 300 318 3 9 8 0 323 342 343

345 346 347 348 349 3 0 356 412 414

416 417 429 434 507 5 5 516 522 523

558 554 559 and 560

द्वि.श्र. II Class: 8 11 12 13 14 17

20 21 27 30 46 47 57 6 61

65 68 75 81 99 134 136 141 164

166 168 201 202 218 223 231 233 236

237 240 244 248 273 279 280 281 290

298 306 307 309 321 322 324 325 326

341 344 351 354 381 383 385 388 409

410 413 415 418 422 424 425 426 430
431 432 435 476 479 503 505 521 525
526 527 530 531 532 539 548 552 553
and 555

तृ.श्रे. III Class: 2 15 19 25 41 42
43 48 56 58 59 67 70 71 72
73 74 76 80 85 93 95 123 132
171 183 187 224 225 226 241 272 274
275 276 277 289 291 294 299 301 308
339 340 353 379 380 386 387 393 397
405 406 411 420 421 427 433 478 481
482 484 489 490 506 524 528 529 540
542 543 544 and 566.

## अभिज्ञः ABHIGNA

प्र.श्रे I Class: 36 50 100 185 249 258
286 288 303 312 330 359 360 362 365
509 510 535 and 543.

द्वि.श्रे. II Class: 5 33 49 51 53 101
126 129 130 131 144 149 173 174 186
188 211 213 214 252 253 254 255 257
264 268 269 270 284 285 287 302 304
305 310 311 324 331 332 334 336 337
357 358 363 364 366 367 368 369 370
438 459 460 511 517 518 536 and 561.

तृ.श्रे III Class: 32 37 52 54 55 63
89 90 91 103 105 106 107 127 145
210 216 250 251 256 559 261 262 263
265 271 327 361 371 439 440 451 453
492 495 512 and 556

## विचक्षणः VICHAKSHANA

प्र.श्रे I Class: 110 115 119 and 558.

द्वि.श्रे. II Class; 38 44 45 113 114 116
121 22 189 191 220 221 222 295 338
373 374 375 376 463 464 466 467 469
497 514 519 and 564.

तृ.श्रे III Class: 39 109 118 120 175 176
190 313 314 315 316 317 468 496 498
499 500 562 563 and 565.

## समर्थः SAMARTHA

I Class:— Nil.

II Class:— Nil.

III Class:— 178 and 520.

Passed in first part only:- 194 and 196.

Passed in secand part only.- 193 198 377 378
470 471 501 502 and 513.

## कोविदः KOVIDA

I Class:— Nil.

II Class:— 472 Only:

I I Class:— Nil.

Passed in Secnd part only:— 199 and 200

Passed in fourth part only'— 179 ann 473.

Passed in I II and III parts only:— 61.

The following are the names of the candidates who stood first in first class of above examinations.

PARICHAYA: No. 346 Sri Subbu, Madurai.

ABHIGNA: No. 286 Srimathi, Alimelu, Vaidyanathan.

VICHAKSHANA:- No 119 M. P. Syamala, Chromepet.

4—11—1966.

की. श्रीनिवासाचार्यः,
परीक्षामन्त्री.

उत्तीर्णाः 420

| परीक्षाः | अभ्यर्थिनः | उपस्थिताः | प्र. श्रे | द्वि. श्रे. | तृ. श्रे. | खण्डशः |
|---|---|---|---|---|---|---|
| परिचयः | 318 | 260 | 73 | 88 | 78 | -- |
| अभिज्ञः | 173 | 149 | 19 | 59 | 37 | — |
| विचक्षणः | 58 | 54 | 4 | 28 | 20 | — |
| समर्थः | 17 | 15 | — | — | 2 | 11 |
| कोविदः | 6 | 6 | — | 1 | — | 5 |
| | 572 | 484 | 96 | 176 | 132 | 16 |

## उपयुक्तानि केन्द्राणि 39

1. अनन्तपुरम् 2. अनकापल्ली 3 अम्बत्तूरु 4. आलुगड्डा 5. कोत्तपेट 6. कोमरगिरिपट्टणम् 7. कोयंबत्तूरु (ए) 8. कोयंबत्तूरु (बि) 9. क्रोंपेट 10. गुण्टूरु 11. चित्तूरु 12 चिदम्बरम् 13. चेल्लूरु 14 जिल्लेलमूडि 15. ताम्बरम् 16. ताडेपल्लिगूडेम् 17. तिरुचिरापल्ली 18. तिरुवल्लिक्केणि 19. तिरुनगरम् 20. तिरुमलै 21. तिरुवेलंगाडु 21 द्वारकतिरुमल 23. नगनल्लूरु 24. नागपट्टणम् 25. नेल्लूरु 26. प्रोद्दटूरु 27. मछली-पट्टणम् 28. मदुरै (ए) 29. मदुरै (बि) 30. मांबलम् 31. मन्नार्गुडि 32. राजमहेन्द्रवरम् 33 विजयवाडा 34. शाहपूर 35, शंगालिपुरम् 36. सेलम् 37. हीरमण्डलम् 38. हैदराबाद (ए) 39. हैदराबाद (बि)

## आगामिनीनां पराभवोत्तरायणपरीक्षाणां कार्यक्रमः

एतद्वत्सरीया उत्तरायण (कुम्भमास) परीक्षाः मार्चिमासे 4, 5, 6 तिथिषु प्रचलिष्यति । तदर्थः आवेदनपत्रशुल्कादिप्रेषणं जनवरी 20 तिथेः पूर्वमेव कर्तव्यम् । विलंबशुल्कसहितं तत्तु जनवरीमासान्तं यावत् स्वीकरिष्यते । सभायां विना मूल्यं आवेदनपत्रं लभ्यते । पाठ्यक्रमश्च प्राचीन एव एतत्परीक्षापर्यन्तं भवति। (तदनन्तरपरीक्षार्थिनस्तु नूतनपाठ्यक्रमानुसारं पठेयुः ।)

विशेषविवरणापेक्षायां समाधातुं सभा सर्वदा सन्नद्धा वर्तते ।

कीं० श्रीनिवासाचार्यः,
परीक्षामन्त्री.

# कपिलेश्वरस्तुतिः

## रचयिता – (कीं० शे०) ब० नरकण्ठीरवशास्त्री

सकलजगदेकहेतुं संसृतिसागरसमुत्तरणसेतुं ।
याचेहं वृषकेतुं मनसो दुर्विषयविमुखतां नेतुम् ॥ ॥ १ ॥

सदने समुल्लसतु मे वदने लक्ष्मीस्सरस्वती चापि ।
विषयेषु मास्तु हृदयं विषमेषुवशंवदं कदापि मम ॥ ॥ २ ॥

विजरीहरीतु हृदयं कबरीभारेषु न शफरीदृशाम् ।
न बरीभरीतु सक्तिं निबिरीसोल्लसदपांगलहरीषु ॥ ॥ ३ ॥

न चरीकरीतु चेतः कुचगिरिशिखरेषु योषितां चिंताम् ।
न च चंचरीतु चंचलकचरीतिषु चंचरीकदृशीषु ॥ ॥ ४ ॥

अधरीकरोतु हृदयं ममाधरीं माधुरीं शमधुरीणाम् ।
विधुरीकरोतु सुदृशां विधुरीतिभृदास्यवैखरीलौल्यम् ॥ ॥ ५ ॥

घनजघनजंघनींतं न जंघनीतान्मनो मनोभूर्मे ।
न च दंदहीतु संसृतिदवानलो मे नलोपमं चेतः ॥ ॥ ६ ॥

स्वंगत्तरंगरंगिणभंगुरतममं नाजनासंगम् ।
जात्वपि ममांतरंगं मांगीकुरुतादनंगपरतन्त्रम् ॥ ॥ ७ ॥

यौवनवनेऽतिगहने मनोनिकुंजे वसन्नृशंसो मे ।
स्मरपाटच्चरवीरो मा चूचुरदगिवतन्विवेकधनम् ॥ ॥ ८ ॥

कटिलम्बिकृत्तिवसनं जटिलं ज्वलदनलधगधगन्निटलम् ।
कुटिलं ममाघपटलं चटुलं वटलम्पटं महो दहतु ॥ ॥ ९ ॥

स्फटिकाभमिन्दुमकुटं घटिकार्धस्यान्तरे पुरस्फुरतु ।
दरहसितसुन्दरं मे दरहरणाज्जृम्भितादरं तेजः ॥ ॥ १० ॥

स्मरघस्मरं स्मरतु मे स्मरणक्षणदत्तवीक्षणं स्मरता ।
तरुणशशांकाभरणं करुणं चेतः प्रणम्रजनशरणम् ॥ ॥ ११ ॥

कन्दलयत्वानन्दं सन्दळयतु मन्दिमानमस्पन्दम् ।
मन्दाकिनीधरं मे मन्दस्मितसुन्दरं महः किमपि ॥ ॥ १२ ॥

करुणारसशीतलया चरणानततापहरणपेशलया ।
शिशिरांशुशेखरो मे शिशिरीकुरुतात् भृशं चेतः ॥ ॥ १३ ॥

निंदतु निंदतु विषयान्विदतु विन्दतु सदा सदासंगम् ।
नन्दतु नन्दतु परमानन्दघने मे मनो मनोजरिपौ ॥ ॥ १४ ॥

श्रीपदपुरवरशरणं श्रीशैलोपत्यकामहाभरणम् ।
कापिलेश्वरमेत्यमनः कपिलीलां त्यजतु विषयविपिनेषु ॥ ॥ १५ ॥

कपिलेशभाग्यराशेः कामाक्ष्याः कुशलकल्पलतिकायाः ।
करुणां कटाक्षलहरी कलयतु संसारतापशांतिं मे ॥ ॥ १६ ॥

न धनेस्तु बन्धने मम निधनेपि स्मरणमस्तु पुरमथने ।
विधिनकण्ठीरवमुखबुधनुतचरणे प्रणम्रजनशरणे ॥ ॥ १७ ॥

## संस्कृतभाषाप्रचारिण्यास्सभायाः नागपट्टणशाखायाः अधिकारिवर्गस्य नूतननिर्वाचनम्

अध्यक्षः

आत्मविद्याभूषणः,

श्री यस्. नारायण अय्यंगार्यः, B. A., B. L., अड्वोकेटः

उपाध्यक्षौ

श्री आर्. सुब्रह्मण्यार्यः, M. A., L. T., प्रधानाध्यापकः

श्री यन्. आर्. सुब्रह्मण्यार्यः, B. Sc., B. L., अड्वोकेटः,

कार्यदर्शी

श्री टि. महादेवशास्त्री, शिरोमणिः

कोशाध्यक्षः

श्री वि. नारायणस्वाम्यार्यः

एते शाखा निर्वाहकाः अन्ये सदस्याश्च संस्कृतप्रचारे बद्धदीक्षा अस्मदीयसेवायां भारभागिनः भविष्यन्तीति कृतज्ञतापूर्वकं विश्वसिमः ॥

प्रधानमन्त्री

## लघुकथा ४

# आञ्जनेयसंपत्

### पैत्तंबाडि० महाकवि० व० रामानुजाचार्यः

आकाशे कादंबिनी पंक्तिशः प्रसरति स्म । नन्दनवने पुष्पगृहीता षण्मुखदासः मेघावृतं आकाशं निरीक्ष्य स्वपुष्पपेटिकायां अर्धभागं संपूर्य प्रस्थितः । ग्रामस्य नन्दनवनस्य च एकशिलादूरतः प्रबलवर्षात्पूर्वं गन्तव्यत्वात् सत्वरं अगच्छत । गृहं गत्वा मालाः बध्वा रात्रिपूजार्थं शिवालये अर्पणीयाः । प्रतिदिनं एतत्कैङ्कर्यपरोऽसौ तदर्थदत्तवेतनेन कुटुम्बपोषणमकरोत् । वृष्टिर्वा जंझावातो वा भवतु पूजार्थं मालाः अनेन दातव्याः । न यदि, ईश्वरः क्षमावानपि अर्चकधर्मकर्त्रादयः कुपिताः वेतनं न दिशेयुः । नन्दनवनवंशकवाटं आयसयन्त्रमुद्रितं कृत्वा सत्वरं प्रस्थितमपि तं मध्येमार्गं एव प्रचण्डः जंझावातः कर्तव्यतामूढमकरोत् । तदा तत्र मार्गपार्श्वस्थितं एकजनमात्रस्थित्यर्हं कंचित् आञ्जनेयालयकं शरणं जगाम सः । प्रवृद्धा वृष्टिः न शाम्यति स्म । तदा स दासः मनस्येवमचिन्तयत् । "अहो! किमेतन्नीचकृत्यं मालाबन्धनचन्दनमर्दनादिकं क्रियते मया । भगवता एतन्नीचकैंकर्यकरणार्थमेव अहं सृष्टः ? धन्यजनवत् उद्यानवासी मोटरवाहनः परिजनसेवितः महान् मनुष्यो भवितुं नार्होऽहम् ?" इति । तदा "किमिति नार्हः, सम्यगर्हः" इति एका अशरीरिणी वागुदभूत् । तां श्रुत्वा संभ्रान्तः षण्मुखः किमेषः स्वप्नः ? अनिद्रस्य कथं स्वप्नः । अत्र विग्रहवान् मारुतिः अहं चैव वर्तावहे, नान्यः" इत्यचिन्तयत् । "षण्मुख, युष्मच्चिन्तनं ज्ञात्वैवाहं हनूमान् वदामि" इति पुनश्च ध्वनिरभूत् । सद्यः षण्मुखः आलयान्तरस्थाज्यदीपोज्वलत्प्रसन्नमुखकमलं आञ्जनेयमपश्यत् । बद्धाञ्जलिः प्रणनाम च ।

हनूमान् – किंचित्कालप्रभृति युष्मच्चिन्तितं अहं जानामि । "न किमहं महान् मनुष्यो भवेयम् ? इति

षण्मुखः – (प्राञ्जलिः) भगवान् तथैव ।

हनूमान् – तदर्थं मूलधनत्वेन वित्तं नास्तीति खिद्यसि हि ।

षण्मुखः — भगवन् तथा ।

हनुमान् — तथा यदि कियत् मूलधनं अपेक्षितं तव ?

षण्मुखः — प्रभो ! यद्येकसहस्रम् मूलधनं प्राप्तं पर्याप्तं स्यात् ।

हनुमान् — तथा यदि अहं तावद्धनं ददामि । तत् न कदाऽपि मम प्रतिपदेयम् । अद्य मयि एकं प्रतिज्ञामात्रं करणीयम् । तथैवाचरणीयम् । न विस्मर्तव्यम् । त्वत्सौकर्येण परोपकाराय च भाव्यम्, नेतरबाधायै । अपि सम्मतिस्तव ।

षण्मुखः — तथैव करोमि यथाभवदाज्ञम् सत्यमेव ।

हनुमान् — तथा यदि पुरतः पश्य । द्विमुसलदूरस्थः खलु एकः तिन्त्रिणीतरुः । तन्मूले किञ्चिद्बहिःप्रकाशा एका शिला वर्तते । सा बहिष्कृता यदि एकस्ताम्रघटो वर्तते । तस्मिन् राजांगदण्डनमृतेन स्वसंघेन मायाण्डचाख्यचोरराजेन स्वेन च तदा तदा चोरितं भूषणधनादिकं निक्षिप्तं अनन्यविदितं मद्रक्षितं विद्यते । तस्मिन् त्वदपेक्षितं एकसहस्रमात्रं गृहीत्वा शेषं सर्वमपि यथापूर्वं निक्षिप्य पूर्ववत् शिलया पिधातव्यम । एतत रहस्यं कदाऽपि कुत्राऽपि कस्मिन्नपि न प्रकाशनीयम । अपि सत्यम तथा कुरुष्व ।

षण्मुखः — सत्यं तथैव यथाज्ञम् ।

तदा वृष्टिरपि सम्यक् निवृत्ता । सद्यः षण्मुखः सहर्षं तत्रैव पुष्पपेटिकां निधाय निरभ्रे अभ्रे चन्द्रिकाप्रकाशे यथाऽऽज्ञनेयाज्ञं तदैव सहस्ररूप्यकाणि आदाय शिलापिधानादिकृत्यानि कृत्वा रात्रावेव मद्रपुरं जगाम । श्वोभूते प्रातः शिवालयधर्मकर्त्रादयः तं अन्विष्य पुष्पपेटिकामात्रं मारुत्यालये दृष्ट्वा तदलाभतः तत्कैंकर्यकरणे अन्यं नियोजयामासुः । ततो वर्षत्रयं अतीतम् । तदा मद्रपुरे अयं षण्मुखः कुमारस्वामिनामा उद्यानमोटरकः परिवारादिभिः निधिदानादिभिश्च महान् मनुष्योऽभूत् । हनूमत्सन्निधौ कृत शपथं विस्मृत्य जनान् प्रलोभ्य तण्डुले शिलाशकलमेलनादिभिः उपर्युपरि धनाशया इतरजनानां सौकर्यदानधर्मादिषु किंचिदपि न व्ययं कुर्वन् अतिधनाढ्यः सः मनस्येव मचिन्तयत् । "शीघ्रतोऽहं रूपयौवनसंपन्नां

कस्यचित् धनाढ्यस्य कन्यकां परिणीय राजांगणभासु जनैर्निर्दिष्टः बहुजनमानितो भवेयम् ।

तदा संजात तण्डुलतैलमाषमुद्गादिदौर्लभ्यात अधिकलाभविक्रयार्थं ऋणतः तण्डुलुदलगुडादिवस्तूनि भारशो भारशः क्रीत्वा महति अतिविशाले स्वोद्यानान्तर्गृहे अतिगूढं पंक्तिशः पंक्तिशः निक्षिप्तवान् । तदा अन्यानि कानिचिद्वस्तूनि संग्रहीतुं अस्य षण्मुखस्वामिनः बहिर्ग्रामस्थितिसमये एकदिने दैवदुर्विपाकात् अकस्मात् संजातः अग्निः अन्तर्गृहपार्श्वादिगृहस्थानि सर्वाणि तण्डुलादिवस्तून्यपि भस्मसाच्चकार । ततः परस्मिन्नहनि आगत्य अग्निदहनं आकस्मिकसंभूतं ज्ञात्वा अन्तः अतिशोकेन नितान्तखिन्नः निधिनिक्षेपाची यादाय दत्वाऽपि ऋणस्य अपरिमिततया उद्यान मोटरादीनि विक्रीयापि ऋणबाधया अनिवृततया अचिन्तयत - "यदि पूर्वदृष्टमारुत्यालयसमीपस्थं धनभूषणादिकं सर्वमपि गृह्णीयाम् तर्हि महाधनी पूर्वचिंतितवत् भवेयम्" इति । तदैव प्रस्थाय कैरप्यज्ञातः प्राचीनग्रामस्वमारुत्यालयं रात्रावेव आगत्य तिन्त्रिणीमूलस्थं धनभूषणादिपूर्णघटं गृहीत्वा अतीव सन्तुष्टः यावत् बहिरज्ञातं पिधाय गन्तुं इयेष तावत् पुरतः एको महान् सर्पः उधृतफणः झिंकुर्वन् आजगाम । ततो भीतः येन येन पथा स गन्तुमियेष तत्रतत्रापि सर्पाः पृथक् पृथक् आगच्छन् । तदा अतिभीतोऽसौ श्रीमदाज्ञनेये पूर्वं कृतं सत्यं अद्य वितथीकृतं इति अनुस्मृत्य "किं तया गतचिन्तया" "इदानीं प्राणरक्षणात्परमेव सर्वमपि" इति संचिन्त्य तं मारुतिं ध्यायति स्म । तदा वागुवाचाशरीरिणी । अये षण्मुख, पश्य धनलोलुपगतिम् इति ।

षण्मुखः – स्वामिन् ! ज्ञातमिदानीं मया । यथा तथावाद्य मम प्राणभिक्षा दातव्या । (इति प्रणम्य अरोदीत)

मारुतिः – मदाज्ञातिलङ्घनफलमिदम् । तदस्तु । अद्य धनं अपेक्ष्यते यदि प्राणत्यागः करणीयः ।

षण्मुखः – जीवितसत्त्व एव खलु धनापेक्षा ।

मारुतिः – तथा यदि अद्य एका प्रतिज्ञा करणीया ।

षण्मुखः – यथानिदेशमाचरामि । एतत्सत्यम् ।

मारुतिः – तथा यदि एतद्घटं पूर्वस्थाने यथापूर्वं निक्षिप। एतद्विषयः कुत्राऽपि कदाऽपि न प्रकाशनीयः। पूर्ववन्मालाकैंकर्यप्रवृत्तो भव।

षण्मुखः सद्यः यथामारुतिनिर्देशमकरोत्। सर्वेऽपि सर्पाः अन्तर्धिमापन्नाः। श्वोभूते प्रातः पूर्ववत पुष्पमालाभिस्सह शिवालयमगच्छत सः। अर्चकादयस्सर्वेऽपि एतदवधि आत्रिचतुरवर्षं कुत्र गतोऽसि इत्यपृच्छन्। षण्मुखः रहस्यं अप्रकाशयन देशतीर्थाटनार्थं गतोऽस्मीति मिथ्यावदत्। मारुतिरपि कस्यचित स्वालयपूजनादि-करणासक्तस्य स्वभक्तस्य स्वप्नमुखेन एतन्निधिधनतः तत्करणमादिश्य तथैव तत्कृतनिजमहालये त्रिकालपूजादिकं स्वीकुर्वन् स्वभक्तानां सर्वफलप्रदाता अभूत्।

आशान्धः त्यक्तकृत्योयः लभते कृत्यमेव तत्।
व्यापारी षण्मुखो जातः मालाकारः पुनर्यथा॥

# सुलभपाठमाला २८

## गृहम् - ३

मम गृहे माता पिता पितामहश्च वर्तते। द्वौ अनुजौ एकः अग्रजः मे वर्तन्ते। ते चोन्नतपाठशालायां पठन्ति। एका अनुजा तिस्रः अग्रजाश्च वर्तन्ते। द्वयोः अग्रजयोः विवाहः आसीत्। ते दीपावलीपर्वानन्दाय अत्र आगते। मम भावुकावपि आगच्छताम्। अनुजा च शिशुः [1]स्तनंधया वर्तते। मम [2]मातुलः अस्मदर्थं बहूनि [3]स्फोटनकानि आनयत्। मम भावुकेपि तानि आनीतवान्। तत्र ठपाकाः [4]डमडमकाः, पुष्पवत्यः, चक्रकाः, सर्पकाः, आकाशबाणाः, अग्निवृक्षाः, व्योमयानानि, अणुस्फोटाः, इत्येवमादयः बहुविधाः सन्ति। तत्र केचित् दाहसमये पुष्पाणि विकिरन्ति, केचित् डमामिति ध्वनंति, केचित् भ्रमंति, अन्ये आकाशमुड्डीयन्ते, केचित् वृक्षाकारं अग्निं उच्चैर्वमन्ति, इतरे व्योमयानवत् ध्वनन्तः दूरं यांति, अपरे श्रवणकठोरशब्देन स्फुटन्ति। केचित् दग्धाः सर्पवत् स्वाकारं वर्धयित्वा भस्मीभवन्ति।

नरकचतुर्दश्यां चतुर्थयामे एव मे माता अस्मान् सर्वानुदस्थापयत् तैलेन शिरांसि अभ्यज्य अस्नापयत्। वयं च ठपाकानां दाहे स्पर्धया समलगाम। अस्मद्गृहप्रांगणं ठपाकदाहेन देदीप्यमानं बभिरितं चासीत।

प्रभाते च वयं सर्वे इड्लिकैः सतेमनैः कृत[6]लघ्वशनाः नववस्त्रधारिणः आमोदामहि। मध्याह्ने च सूपेन वार्ताकपोठलिकादि शाकैः लेह्यैः [3]चोष्येण [9]संभारेण पायसेन [10]माषचक्रगुडचक्रलड्डुकादिभक्ष्यैश्च अभुंज्महि। रात्रौ पुनः ठपाकानां दाहः दीपकानां भ्रमणमित्यादिकं यथापूर्वं प्रावर्तत।

परस्मिन् दिने दीपावलिः। तत्र दिवा महता संभ्रमेण भोजनप्रबन्धादिकमासीत्। तस्यां रात्रौ च ठपाकानां दाहकाण्डः। तस्यां रात्रौ दाहस्पर्धा काचन समजनि। प्रातिवेशिकाश्च परस्परजिगीषया ठपाकान् अस्फोटयन्। एतादृशविनोदेन अर्धरात्रमासीत्। दाह्यवस्तूनि च सर्वाणि निर्दग्धानि। ततः वयं अवशाः निद्रयो शयनमाशेमहि॥

---

1. क्षीरपायिनी 2. मातुः सोदरः 8. आग्नेयद्रव्याणि 4. ठपाकभेदाः 5. चट्नीसहितैः 6. टिफिन् 7. चट्नी 8. रसः 9. संभारयुतद्रवव्यंजनम्
0, माषापूपः, गुडापूपः।

# भारतीयवाङ्मये भौगोलिकविशेषप्रकाशनप्राचुर्यम्

ले. श्री पिडपर्ति शेषाचलशास्त्री, पोडगट्टलपल्ली.

(वाल्मीकिरामायणे)

क्षीरोदं समतिक्रम्य ततो द्रक्ष्यथ वानराः ।
जलोदं सागरश्रेष्ठं सर्वभूतनमस्कृतम् ॥

व्याख्यानम् – हे नराः = भो मानवाः, क्षीरोदं=धवलजलयुतं पसिफिक् समुद्रं, समतिक्रम्य = तीर्त्वा, सर्वभूतनमस्कृतं = सकलप्राणिपूजितं, जलोदं = शीतलजलयुतं, सागरश्रेष्ठं = उत्तमं समुद्रं, द्रक्ष्यथ वा = अवश्यं वीक्षिष्यध्वे ॥

तात्पर्यम् – पसिफिक्समुद्रादनन्तरं शीतलजलप्रवाहयुतः समुद्रो वर्तते ।

एतावद्वानरैश्शक्यं गन्तुं वानरपुंगवाः ।
अभास्करममर्यादं न जानीमस्ततः परम् ॥

व्याख्यानम् – हे नरपुङ्गवाः = हे मनुजश्रेष्ठाः. नरैः = मनुजैः, गन्तुं शक्यं वा = गमनार्हं, एतावद्वा = एतावत्पर्यन्तमेव, अभास्करं = (अभासं करोति तं) तेजोभावकरं, अमर्यादं = अनवधिं, तदनन्तरं = तस्मादनन्तरं प्रदेशं, न जानीमः = न विद्मः ।

—:०:—

# मद्यपस्य विवेकः

प्रा० लोखण्डे, मारसतपूर, धारवाड.

अथ कस्मिंश्चित् नगरे नरौ अवसताम् । उभयोः मद्यं बहु रुचिरतां आवहति । अतः उभयोः अपि मद्यपानस्य महान् दुराचारः आविष्टः ।

अथैकदा तौ मद्यपानमत्तौ नगरस्य राजमार्गेण गच्छन्तौ आस्ताम् । अहं नगरस्य राजा, अहमेव सुजनः, अखिले नगरे न कः अपि अत्र मदपेक्षा श्रेयान् वर्तते, एवंजातीयकं च किमपि किमपि प्रलपन्तौ तौ दोलायमानदेहौ अभ्रमताम् ।

मदेन तयोः नयने रक्ते हस्ते च मद्यपात्रम् । मुखात् दुर्गन्धः । पङ्केन मलिनं गात्रं । तौ दृष्ट्वा जना उपहसन्ति स्म ।

तयोः मध्ये एकस्य कटिवस्त्रं आसीत् । अपरस्य तु तदपि न । कटिवस्त्रधरः अपरं अपश्यत् । तं च अवदत् – भो मित्र, न किमपि वस्त्रं तव वर्तते । न खलु एतद् भद्रम् । पश्य, पश्य, जनाः सर्वे त्वां प्रेक्ष्य विहसन्ति । एवं वस्त्रहीनः मा गच्छ । गृहाण एतद् मम वस्त्रम् । इति उक्त्वा स्वीयं कटिवस्त्रं मुक्त्वा तं प्रति अक्षिपत् ।

श्री शृङ्गेरि विरूपाक्षपादुकापीठाधिपतयः श्री जगद्गुरु श्रीमत्परमहंस
श्रीमदभिनव विद्याशङ्कर

## श्रीश्रीश्री परिपूर्ण प्रकाशानन्दभारतीमहास्वामिनां

## 77 तमः जन्मदिनोत्सवः

परिपूर्णप्रकाशोऽयं श्रीमदानन्दभारती । श्रुतिस्मृतिपुराणानामालयः करुणालयः ॥

श्रीमत्स्वामिपादानां 77 तम-वर्षीय-जन्मदिनोत्सवः श्रीमत्पराभवनामवत्सर-भाद्रपदबहुल द्वादशी कुजवासरे 11-10-66 तारिकायां आंध्रप्रदेशराजधानी-भूतहैदराबादनगर्यां शिष्यैः सहस्रनामसहितवेदोक्तविधिना श्रीस्वामिपादानां पाद-पूजादियुतः महावैभवेन प्राचाल्यत । श्रीस्वामिपादाः कृष्णामंडलांतर्गतकृष्णानदीतीरे विराजमानायां विजयवाटीनगर्यां चातुर्मास्यदीक्षया न्यवसन् । प्रतिदिनं श्री जगद्गुरु श्रीश्रीश्री बोधानन्दभारती महास्वामिसिद्धाश्रमे प्रातः सूत्रभाष्य प्रवचनं पूजादिकं, प्रतिसायं च उपनिषदाद्युपन्यासाः अविरतं प्रचलन्ति स्म । शिष्याः भक्ताश्च असंख्याकाः तत्तदवकाशेषु उपस्थाय आनन्दपरवशाः अभवन् ।

अथ श्रीस्वामिपादानां जन्मोत्सवसमये भक्तान् आत्मपादस्पर्शेनान्वगृह्णन् । शिष्याः वेदघोषसहितेन महितेन पूर्णकुम्भेन स्वामिपादेभ्यः स्वागतमर्पयित्वा प्रार्थयन् ।

वत्सलाः स्वामिपादाश्च परितुष्टाः कटाक्षयित्वा आशिषमन्वगृह्णन् । प्रथमतः संस्कृते तदनन्तरं च आन्ध्रभाषायां भाषमाणाः ते अवोचन् – अपूर्वं अपारं च प्राचीन-भारतीयविज्ञानं तत्सर्वमपि संस्कृतभाषायां स्थितम् । अतिरमणीया गैर्वाणी वाणी । पाश्चात्या भारतीयविज्ञानमूलच्छेदाय गैर्वाणीस्थाने आंग्लीमारोपितवन्तः । तत्संकल्पानुगुणमेव दृढमूला आंग्ली अद्यापि असस्यप्ररोहाः सस्यमिव संस्कृतं क्षपयति । तथापि भारतीयविज्ञानं सदा अमृतमेव वर्तते । कोऽपि विद्वान् व्याजहार यावत् वेदाः वर्तन्ते; यावत् रामायणमहाभारतादिकं प्रचार्यते यावच्च कालिदासादि-काव्यानि श्रूयन्ते तावच्च भारतीयविज्ञानं जीवत्येवेति ।

एतादृशेपि प्रमादकाले भारतीयसंप्रदायप्रचारं कुर्वन्तीति, तत्प्रोत्साहिताः असंख्याकाश्च भारतीयसांप्रदायाननुसरन्तीति चैतत् चैतन्यस्य प्रभाव एव । अस्मदीयशिष्याणां सुसंकल्पं भक्तिं अनुसरणरीतिं च दृष्ट्वा अतीव संतुष्टाः स्मः, सर्वे च एतत्प्रचारकान् सहकृत्य महान्तं लाभं प्राप्नुयुरिति नारायणस्मृतिः इति ।

श्री श्रीस्वामिपादानां जन्मदिनोत्सवसंदर्भं पुरस्कृत्य शिष्यैः सप्रश्रयं समर्पितः हृदयपूर्वकविनयसहित कुसुमांजलिः –

**लोकैकाचार्यवर्याः,**

भवत्कटाक्षप्रसरणकारणात् एव मति - मतभेदकलुषिते कालेऽस्मिन् भारते आस्तिकता लता अम्लाना अनुपद्रवा च प्रवर्धते । साक्षात्कृतात्मतत्त्वानां लोकोद्धरणमात्रगृहीतदीक्षाश्रमाणां वर्णाश्रमधर्मसंस्थापननिरतानां वैदिकमत-संरक्षणदीक्षितानां भवतां अयमस्माकं कुसुमांजलिः ।

**घटनाघटनसमर्थाः महानुभावाः,**

भवतां शुभानुध्यानेनैव खलु खलकलिबहुलोयं लोकः, बहुळविपत्परीतोपि विपुलपापभरितोपि, सकलदुर्गुणवलितोपि, न शिथिली भवति, न नश्यति, न भस्मी भवति । भवत्संकल्पेनैव अद्यापि आस्तिकाग्रेसरा राजन्ते, देवा आचार्याश्च स्वतेजसा यथातथं भ्राजन्ते, धर्माः, सुकर्माणि च अविकलं प्रतिकलं प्रवर्तन्ते ।

**भक्तपराधीनाः यतीन्द्रवर्याः,**

भारतीयसंस्कारसंरक्षणाय तत्वप्रचारं प्रथमं साधनं मन्वानैः, अस्मादृशैः क्षुद्रैरपि क्रियमाणां इमामल्पीयसीं सेवां स्वीकृत्य बहुळयित्वा च कृत्यनिर्देशेन अस्मान् प्रचोद्य अस्मत्प्रयत्नं विस्तारयन्तु सफलयन्तु नितराम् ।

अकिंचनाः कृतज्ञतांजलिमात्रमर्पयामो वयं अस्मत्प्रार्थनामवितथयित्वा पादस्पर्शपवित्रसभाभ्यः महद्भ्यो भवद्भ्यः ॥

राणी रामानन्दशास्त्री —

# प्रार्थना

—:o:—

संस्कृतरसिकाः, भारतीयाः,

गैर्वाणीयं पञ्चवर्षप्रभृति आर्थिकसंकटे महति वर्तमानेपि त्रैमासिकीत्वात् पुरस्सरीभूय मासिकीत्वमालम्ब्य यथासमयं निस्सरति, संस्कृतसेवां यथाशक्ति आचरतीति सुविदितमेव भवताम् ।

एतावत्पर्यन्तं भारतीयसर्वकारस्य यत्किञ्चिदनुदानं लब्धमासीत् येन अस्याः पाथेयं तत प्राणरक्षणायालमासीत् । एतद्वर्षे संस्कृत पत्रिकाणां अनुदानविषये भरतवाक्यस्य श्रुतिसम्मेलनमाचरति भारतसर्वकारविद्याविभागः । तत्सूचना-त्वेन तेन पत्रिकाप्रकाशकानां हस्तं प्रापितः कश्चन लेखोपि ।

अतः संस्कृत्यभिमानिनः संस्कृताभिमानिन एव इतःपरं संस्कृतभाषां तत्पत्रिकाश्च पोषयेयुः, न प्रभुत्वमुखं पश्येयुः । अन्यथा भारतीयसंस्कृतेरेव विनाशः सद्यः सम्पद्यते ।

अतस्सहृदयाः,

व्यक्तिशः प्रार्थनायामशक्तिं अस्माकं अनुसन्धाय इमां प्रार्थनामङ्गीकृत्य स्वविषयकमेव विभाव्य वार्षिकं चतूरूप्यकान्यूनं स्वच्छन्दं प्रेषयित्वा पोषयन्तु एतां लभन्तां च एतत्सेवाः यथापूर्वम् ।

इति प्रार्थयिता,

ति. कं. तिरुवेङ्कटाचार्यः,

प्रधानमन्त्री.

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R.C.No. 27-A 3/65 Date 14—7—65.

R. N. 8145/60. Postal R. No. H. 493.

वार्षिकम् रू. ४-००

# प्रहेलिका:

### ले० मा० शिवरामराजः, प्रोद्दूरु.

जायते पितरं हत्वा प्रसूते पितरं पुनः ।
पितामहेन तीक्ष्णेन मिलित्वा तत्किमुच्यताम् ॥
( तक्रं, तत्पिता दधि, पितामहो दुग्धम् )

### ले० नारायणमूर्तिः, आल्लगड्डा.

किं स्याद्वर्णचतुष्टयेन वनजं ? वर्णत्रये भूषणम्
स्यादाद्येन मही, त्रयेण च फलं, मध्यद्वयं प्राणदम् ।
व्यस्तैर्गोत्वतुरङ्गघासकुसुमान्यन्ते च सम्बोधनं
ये जानन्ति मनीषिणः पदमिदं तेषामहं किंकरः ॥
( कुवलयम् – वलयम्, कुः, कुवलं=बदरीफलं, बलम् )

### ले० व० रामानुजाचार्यः, पैत्तंबाडि.

इन्दीवराक्ष्याः स्फटविद्रुमोष्ठ्याः
संकेतमुद्दिश्य निशि प्रयान्त्याः ।
चोरास्समस्ताभरणानि हृत्वा
नासामणिं नापहरन्ति चित्रम् ॥
( अत्र अक्षिप्रभया उपरि, नीलं ओष्ठप्रभया अधः अरुणं तं गुञ्जामणिं मत्वा तं नापहरन् इति भावः )

—:०:—

Published by Sri N. Ramanatha Iyer, B A., B. L, Advocate & Secretary, S. B. P. Sabha, Chittoor. (A. P.)
Printed by Sri T. K. Thiruvengadacharya, at vijaya Press, Chittoor, (A P.) C 1500